॥ नवाक्षरीस्तोत्रम् ॥

श्रीगुरुचरणसरोजं श्रीकरभवतरणसुकरदृढनावम् ।
मच्चितमधुपझंकृतमानन्दं नौमि शांकरं शरण्यम् ॥ १॥

ऐन्द्रधनुर्मरतकमामैरावतनाथगीर्भिरभ्यर्च्याम् ।
ऐंकारार्थस्वरूपामैशानीनाथसेवितां वन्दे ॥ २॥

ह्रीनतदैत्यसमूहां हृद्यां सुरलोकसेविताङ्घ्रियुगाम् ।
ह्रींकारान्त्यसरूपां हृदयविलासप्रचोदितां वन्दे ॥ ३॥

क्लींकारकामजननीं क्लीमितिशब्दप्रपूरितदिगन्ताम् ।
क्लीबस्त्रीपुंशब्दक्रीडारूपां नमामि विश्वमयीम् ॥ ४॥

चामरबिभ्रद्वाणीचन्द्रसजातासुसेव्यपार्श्वयुगाम् ।
चरणतलमहिषमुण्डां चापादिकरां नमामि चामुण्डाम् ॥ ५॥

मुण्डमणिहारकण्ठीं मुकुरकपोलप्रभासुशोभमुखीम् ।
मुहुरास्फालितधनुषं मुरहरभागिनीं नमामि मुग्धतनुम् ॥ ६॥

डाकिन्याद्यभितुष्टां डमरुकनादेन पूरितदिगन्ताम् ।
डम्भाभिमानहन्त्रीं डामरतन्त्रप्रकाशितां वन्दे ॥ ७॥

यैवर्णसत्यमायायस्यै दत्तान्यायुधानि शक्राद्यैः ।
यौवनमदसाम्राज्यायै तस्यै नमोऽस्तु विद्यायै ॥ ८॥

विश्वोत्तीर्णां विद्यां विविधजगच्चित्रकल्पनारूपाम् ।
वियदादिसृष्टिहेतुं विश्वासैकप्रकाशितां नौमि ॥ ९॥

चेतसि नितरां वासितचेतोमयि चैत्यचेतने चतुरे ।
चम्पककलिकानासे चामीकरभासुराङ्गि नौमि त्वाम् ॥ १०॥

अक्षरनवाक्षरीयं निक्षेपमयी सुवाक्सुधारूपा ।
एतत् स्तोत्रम् पठतां यच्छति सौभाग्यकीर्तिपुष्टिधृतीः ॥ ११॥

॥ इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण त्यागराजनाम्ना विरचितं नवाक्षरीस्तोत्रं संपूर्णम् ॥